अथ

# गणपत्यथर्वशीर्ष

प्रारंभः ॥



॥ श्रीगणेशाय नमः ॥ ॐ भद्रंकर्णेभिः ॥ १ ॥ स्वस्तिनइंद्रो० ॥ १ ॥ अथ गणेशाथर्वशीर्षं व्याख्यास्यामः ॥ ॐ नमस्तेगणपतये ॥ त्वमेव प्रत्यक्षंतत्त्वमसि ॥ त्वमेवकेवलंकर्तासि ॥ त्वमेवकेवलंधर्तासि ॥ त्वमेवकेवलंहर्तासि ॥ त्वमेवसर्वंखल्विदंब्रह्मासि ॥ त्वंसाक्षादात्मासि नित्यं ॥ ऋतंवच्मि ॥ सत्यंवच्मि ॥ अव-

त्वंमां ॥ अववक्तारं ॥ अवश्रोतारं ॥ अवदातारं ॥ अवधातारं ॥ अवानूचानमवशिष्यं॥ अवपश्चात्तात् ॥ अवपुरस्तात् ॥ अवोत्तरात्तात् ॥ अवदक्षिणात्तात् ॥ अवचोर्ध्वात्तात् ॥ अवाधरात्तात् ॥ सर्वतोमांपाहिपाहिसमंतात् ॥ त्वंवाङ्मयस्त्वंचिन्मयः ॥ त्वमानंदमयस्त्वंब्रह्ममयः ॥ त्वंसच्चिदानंदाद्वितीयोसि ॥ त्वंप्रत्य-



क्षंब्रह्मासि ॥ त्वंज्ञानमयोविज्ञानमयोसि ॥ सर्वजगदिदंत्वत्तोजायते।सर्वंजगदिदंत्वत्तस्तिष्ठति। सर्वंजगदिदंत्वयिलयमेष्यति ॥ सर्वंजगदिदं त्वयिप्रत्येति ॥ त्वंभूमिरापोनलोनिलोनभः ॥ त्वंचत्वारिवाक्पदानि ॥ त्वंगुणत्रयातीतः ॥ त्वंकालत्रयातीतः ॥ त्वंदेहत्रयातीतः ॥ त्वंमूलाधारस्थितोसिनित्यं ॥ त्वंशक्तित्रयात्मकः ॥

त्वांयोगिनोध्यायंतिनित्यं ॥ त्वंब्रह्मात्वंविष्णु-
स्त्वंरुद्रस्त्वमिंद्रस्त्वमग्निस्त्वंवायुस्त्वंसूर्यस्त्वंचंद्र-
मास्त्वंब्रह्मभूर्भुवः स्वरोम् ॥ गणादींपूर्वमुच्चार्य
वर्णादींस्तदनंतरं ॥ अनुस्वारःपरतरः ॥ अर्धें-
दुलसितं ॥ तारेणरुद्धं ॥ एतत्तवमनुस्वरूपं ॥
गकारःपूर्वरूपं ॥ अकारोमध्यमरूपं ॥ अनु-
स्वारश्चांत्यरूपं ॥ बिंदुरुत्तररूपं ॥ नादःसं-



धानं ॥ संहितासंधिः ॥ सैषागणेशविद्या ॥
गणकऋषिः ॥ निचृद्गायत्रीछंदः ॥ गणपति-
र्देवता ॥ ॐगंगणपतयेनमः ॥ एकदंताय
विद्महे वक्रतुंडायधीमहि ॥ तन्नोदंतिःप्रचोद-
यात् ॥ एकदंतंचतुर्हस्तंपाशमंकुशधारिणम् ॥
रदंचवरदंहस्तैर्बिभ्राणंमूषकध्वजम् ॥ रक्तंलं-
बोदरंशूर्पकर्णकंरक्तवाससं ॥ रक्तगंधानुलिप्तां-

गंरक्तपुष्पैःसुपूजितम् ॥ भक्तानुकंपिनंदेवंज-
गत्कारणमच्युतं ॥ आविर्भूतंचसृष्ट्यादौप्रकृ-
तेःपुरुषात्परं ॥ एवंध्यायतियोनित्यंसयोगी
योगिनांवरः ॥ नमोव्रातपतये नमोगणपतये
नमःप्रमथपतये नमस्ते अस्तुलंबोदरायैकदंता-
यविघ्ननाशिनेशिवसुतायश्रीवरदमूर्तयेनमः ॥
एतदथर्वशीर्षंयोधीते ॥ सब्रह्मभूयायकल्पते ॥



ससर्वतःसुखमेधते ॥ ससर्वविघ्नैर्नबाध्यते ॥
सपंचमहापापात्प्रमुच्यते ॥ सायमधीयानोदि-
वसकृतंपापंनाशयति ॥ प्रातरधीयानोरात्रि-
कृतंपापंनाशयति ॥ सायंप्रातःप्रयुंजानोअपा-
पोभवति ॥ सर्वत्राधीयानोऽपविघ्नोभवति ॥
धर्मार्थकाममोक्षंचविंदति ॥ इदमथर्वशीर्षम-
शिष्यायनदेयं॥योयदिमोहाद्दास्यति॥सपापी-

यान्भवति ॥ सहस्रावर्तनात् ॥ यंयंकामम-
धीते ॥ तंतमनेनसाधयेत् ॥ अनेनगणपति-
मभिषिंचति ॥ सवाग्मीभवति ॥ चतुर्थ्याम-
नश्नन्जपति ॥ सविद्यावान्भवति ॥ इत्यथर्व-
णवाक्यं ॥ ब्रह्माद्याचरणंविद्यात् ॥ नबिभेति
कदाचनेति ॥ योदूर्वांकुरैर्यजति ॥ सवैश्रव-
णोपमोभवति ॥ योलाजैर्यजति ॥ सयशोवा-



न्भवति ॥ समेधावान्भवति ॥ योमोदकसह-
स्रेणयजति ॥ सवांछितफलमवाप्नोति ॥ यःसा-
ज्यसमिद्भिर्यजति ॥ ससर्वंलभतेससर्वंलभते ॥
अष्टौब्राह्मणान्सम्यग्ग्राहयित्वा ॥ सूर्यवर्चस्वी
भवति ॥ सूर्यग्रहेमहानद्यांप्रतिमासन्निधौवा
जप्त्वा ॥ सिद्धमंत्रोभवति ॥ महाविघ्नात्प्रमु-
च्यते ॥ महादोषात्प्रमुच्यते ॥ महापापात्प्रमु-

च्यते ॥ ससर्वविद्भवतिससर्वविद्भवति ॥ यएवं वेद ॥ इत्युपनिषत् ॥ भद्रंकर्णेभिः० ॥ १ ॥ ॥ स्वस्तिनऽइंद्रोवृद्धश्रवाः स्वस्तिनःपूषाविश्व-वेदाः ॥ स्वास्तिनस्ताक्ष्र्यो अरिष्टनेमिः स्वस्ति-नोबृहस्पातिर्दधातु ॥ १ ॥

॥ इति गणपत्यथर्वशीर्षं समाप्तम् ॥



## ॥ अथ संकटनाशनगणपतिस्तोत्रम् ॥

श्रीगणेशाय नमः ॥ नारद उवाच ॥ प्रणम्य शिरसा देवं गौरीपुत्रं विनायकम् ॥ भक्त्या व्यासं स्मरेन्नित्यमा-युःकामार्थसिद्धये ॥ १ ॥ प्रथमं वक्रतुंडं च एकदंतं द्विती-यकम् ॥ तृतीयं कृष्णपिंगाक्षं गजवक्त्रं चतुर्थकम् ॥ २ ॥ लंबोदरं पंचमं च षष्ठं विकटमेव च ॥ सप्तमं विघ्नराजेंद्रं धूम्रवर्णं तथाऽष्टमम् ॥ ३ ॥ नवमं भालचंद्रं च दशमं तु विनायकम् ॥ एकादशं गणपतिं द्वादशं तु गजाननम्

॥ ४ ॥ द्वादशैतानि नामानि त्रिसंध्यं यः पठेन्नरः ॥ न च विघ्नभयं तस्य सर्वसिद्धिकरं प्रभो ॥ ५ ॥ विद्यार्थी लभते विद्यां धनार्थी लभते धनम् ॥ पुत्रार्थी लभते पुत्रान्मोक्षार्थी लभते गतिम् ॥ ६ ॥ जपेद्गणपतिस्तोत्रं षड्भिर्मासैः फलं लभेत् ॥ संवत्सरेण सिद्धिं च लभते नात्र संशयः ॥ ७ ॥ अष्टानां ब्राह्मणानां च लिखित्वा यः समर्पयेत् ॥ तस्य विद्या भवेत्सद्यो गणेशस्य प्रसादतः ॥ ८ ॥

इति श्रीनारदपुराणे संकटनाशनं नाम गणपतिस्तोत्रं संपूर्णम् ॥